Bill No. 5/07-08

99 2008-0558

Māthurī Pañchalakṣaṇī ṭippaṇam

Kālīśaṅkarī - Edited and published by Bābū Vārāṇasī Prasāda at Kāśī Sanskrit Press. Loose leaves lithoprint edn., Benares, 1931 Vikra.

(10)

(1266)







॥ अथमाथुरीपंचलक्षणीटिप्पणंकालीशंकरीलिख्यते ॥








म·थु·टी· ॥श्रीगणेशायनमः॥साध्यतावच्छेदकसंबंधावच्छिन्न साध्यतावच्छेद कावच्छिन्नप्रतियोगिताकाभाववृत्तिसाध्यसामान्यीयप्रति॰
१ योगितावच्छेदकसंबंधेनसाध्याभाववत्त्वंविवक्षितंमथुरानाथेन।अथात्रसाध्यतावच्छेदकसंबंधावच्छिन्नप्रतियोगिताकाभाववृत्तिइत्येवा॰
स्तां।किंसाध्यतावच्छेदकावच्छिन्नइत्यनेनआत्मत्वप्रकारकप्रमाविशेष्यत्वाभाववान् आत्मत्वादित्यादौआत्मत्वप्रकारकप्रमाविशेष्यत्वा
भावात्मकसाध्यस्यकालिकसंबंधावच्छिन्नप्रतियोगिताकाभावेसाध्यतावच्छेदकीभूतस्वरूपसंबंधावच्छिन्नप्रतियोगिताकत्वाभावादेवा
व्याप्त्यभावादितिचेन्न।तादृशाभावस्यापिसमवायादिसंबंधावच्छिन्नप्रतियोगिताकप्रमेयाभावनिष्ठस्वरूपसंबंधावच्छिन्नप्रतियोगिता
कत्वात्।नचतथापिसाध्यतावच्छेदकसंबंधावच्छिन्नप्रतियोगितायांसाध्या ‑ भावनिष्ठस्वरूपनिष्ठत्वनिवेशेनैवोक्ताव्याप्तिवारणसंभ
वात्ःलंसाध्यतावच्छेदकावच्छिन्नत्वनिवेशनेतिवाच्यम्॥आत्मत्वविशिष्टप्रमेयत्वावच्छिन्नस्वरूपसंबंधावच्छिन्नप्रतियोगिताकाभाव
वृत्तिस्वरूपसंबंधावच्छिन्नप्रतियोगितायाअपितादृशसाध्यनिरूपितत्वयातदवच्छेदकीभूतस्वरूपसंबंधेनात्मत्वप्रकारकप्रमाविशेष्य
त्वस्वरूपसाध्याभावस्यात्मनिसत्वादुक्ताव्याप्तितादवस्थ्यात् साधतावच्छेदकावच्छिन्नत्वनिवेशेच आत्मत्वविशिष्टप्रमेयत्वावच्छिन्ना
भावस्यसाध्यतावच्छेदकीभूतात्मत्वप्रकारकप्रमाविशेष्यत्वाभावत्वावच्छिन्नप्रतियोगिताकत्वविरहान्नाव्याप्त्यवकाशइति नचैवमपिका
लिकसंबंधावच्छिन्ननिरवच्छिन्नाधिकरणत्वाप्रसिद्ध्याव्याप्तितादवस्थ्यमितिवाच्यंनिरवच्छिन्नत्वपदेननिरवच्छिन्नवृत्त्यनियामक
संबंधानवच्छिन्नत्वावच्छिन्नत्वा भयाभाववत्वस्यविवक्षितत्वात्॥कालिकसंबंधावच्छिन्नाधिकरणतायांनिरवच्छिन्नवृत्त्यनियाम॰
कसंबंधानवच्छिन्नत्वविरहादेवो ‑ भयाभावस्याक्षतत्वात्।कालिकसंबन्धानवच्छिन्नत्वावच्छिन्नत्वोभयाभाववत्त्वनिवेशेनैवोप राम
पत्तौअनुगमोव्यर्थइतिचेन्न।दिक्कृतविशेषणताविशेषसंबंधावच्छिन्नप्रतियोगिताकात्मत्वप्रकारकप्रमाविशेष्यत्वाभाववानात्मत्वा १

दित्यादावव्याप्त्यापत्तेः दिक्कृतविशेषणताविशेषसंबंधावच्छिन्ननिरवच्छिन्नाधिकरणत्वाप्रसिद्धेः तादृशसंबन्धावच्छिन्नाधिकरणताया
मुक्तोभयाभाववत्त्वविरहात् अथैवमपि कालिकसंबन्धावच्छिन्नप्रमेयाभावस्य स्वरूपसंबंधेन साध्यताया आत्मत्वादिहेतावव्याप्तिः
कालिकसंबन्धावच्छिन्नप्रतियोगिताकतादृशप्रमेयाभावाभावस्यातिरिक्तत्वेपि प्रमेयत्वेन तादृशप्रमेयत्वावच्छिन्नस्वरूपसंबंधावच्छि
न्नप्रतियोगिताकाभाववत्तयातन्निष्ठसाध्यीयप्रतियोगितावच्छेदकीभूतस्वरूपसंबंधस्यापि लक्षणघटकतया हेतुमति प्रमेयात्मकसा
ध्याभावस्य सत्त्वादिति चेन्न। साध्यतावच्छेदकसंबंधावच्छिन्नइत्यादिकृत्यं तेन साध्यतावच्छेदकावच्छिन्नसाध्यतावच्छेदकसंबंधाव
च्छिन्नप्रतियोगितानिरूपकीभूतानुयोगितावच्छिन्नत्वविवक्षितत्वात् तथा च साध्यतावच्छेदकतादृशप्रमेयाभावत्वावच्छिन्नस्व
रूपसंबंधावच्छिन्नप्रतियोगितानिरूपकत्वस्य प्रमेयाभावीयकालिकसंबंधावच्छिन्नप्रतियोगिताकाभावत्वरूपानुयोगितायामसत्त्वा
त् तादृशप्रमेयाभावत्वावच्छिन्नस्वरूपसंबंधावच्छिन्नप्रतियोगिताकाभावत्वरूपानुयोगितायाएव तन्निरूपकत्वात् तदवच्छिन्नकालि
कसंबंधावच्छिन्नप्रतियोगितायाएव साध्यनिरूपितत्वात् तदवच्छेदकीभूतकालिकसंबंधेन साध्याभाववति काले आत्मत्वादेरवृत्ति
त्वान्नोक्ताव्याप्त्यवकाश इति ध्येयं॥१॥ साध्यतावच्छेदकसंबंधावच्छिन्नप्रतियोगिताकसाध्याभाववृत्तिसामान्यीयप्रतियोगितावच्छे
दकसंबंधेन साध्याभावाधिकरणं वाच्यं अतो नाभावसाध्यकाव्याप्तिः साध्यसामान्यीयत्वं च यावत्साध्यनिरूपितत्वं स्वानिरूपकसाध्य
कभिन्नत्वमिति यावत् तच्च प्रतियोगिताविशेषणं तेन समवायेन विषयितया प्रमेयसाध्यके ज्ञानत्वादिहेतौ प्रमेयाभावस्य कालिकसंबंधा
वच्छिन्नप्रतियोगिताको योभावस्तस्यापि प्रमेयतया तन्निरूपितप्रतियोगितावच्छेदककालिकसंबंधेन साध्याभावस्याधिकरणे सत्त्वेपि ना
व्याप्तिः साध्यतावच्छेदकसंबंधावच्छिन्नप्रतियोगिताकाभाववृत्तित्वं प्रतियोगिताविशेषणं तेनात्मत्वप्रकारकप्रमाविशेष्यत्वस्य कालिकसंबंधे

म·टि·का नाभावस्य स्वरूपसंबंधेन साध्यत्वे आत्मत्वादिहेतौ नाव्याप्तिः। अत्र प्रतियोगितावच्छेदकवत्प्रतियोग्यप्यन्योन्याभावाभावस्तेन तादात्म्ये
२ न घटादेः साध्यत्वे घटत्वादिहेतौ नाव्याप्तिः इत्थं चात्यंताभाववत्त्वं निरूपितत्वेनापि प्रतियोगिताविशेषणीया तेन घटभिन्नं घटत्वत्वा
दित्यादौ नाव्याप्तिः॥ इति माथुरी॥ अत्रेदमाशंकते। घटभिन्नं कपालत्वादित्यादावव्याप्तिः साध्याभाववृत्तिसाध्यीयप्रतियोगितावच्छेदक
समवायसंबंधेन घटस्वरूपसाध्याभावस्य साधनाधिकरणे वृत्तेः न चात्र विवक्षणीयसाध्याभाववत्त्वविशिष्टनिरूपिताधिकरणत्वस्य कपा
ले सत्त्वान्नाव्याप्तिरिति वेन्न यतो घटभेदाधिकरणे विरोधिता घटकसंबंधेनैव घटभेदाभावाधिकरणत्वेन स्वीक्रियते तथा च तादात्म्येन घ
टव्यक्त्या समं समवायेन घटव्यक्त्या च समं विरोधिता घटभेदेन समं घटभेदाभावस्य समवायेनैव विरोधिता न तु तादात्म्येनानुभवानुरो
धादिति तादात्म्येन घटभेदाभाववति घटत्वे हेतोर्वृत्तेरव्याप्तिवारणायात्यंताभावत्वनिवेशः घटभेदाभावस्य विरोधिताघटकसमवायेन
कपाले स्वीकारात् घटभिन्नं कपालत्वादित्यादौ नाव्याप्तिरित्याहुः वस्तुतो यादृशसाध्याभाववृत्तिसाध्यीयप्रतियोगित्वात्तादृशसाध्या
भावाधिकरणनिरूपितवृत्तित्वसामान्याभावस्य विवक्षितत्वात् न चात्यंताभावत्वनिरूपितप्रतियोगितानिवेशो व्यर्थ इति वाच्यं। तद्विव
क्षायां अत्रैव तात्पर्यात् घटभिन्नं पटत्वादित्यादावव्याप्तिमाशंक्य साध्याभाववृत्तिसाध्यीयप्रतियोगित्वतदवच्छेदकत्वान्यतरावच्छे
दकसंबंधेन साध्याभावाधिकरणं विवक्षितं मथुरानाथेन अत्र कालिकसंबंधेनाभाववतः संयोगेनाभावे साध्ये गुणत्वादिहेतावव्या॰
प्तिः साध्याभाववृत्ति यत्साध्यीयप्रतियोगितावच्छेदकत्वं तदवच्छेदककालिकसंबंधेन साधाभावाधिकरणे गुणादौ हेतोर्वर्तमानत्वा
त् एवं कालिकसंबंधेन प्रमेयविशिष्टस्य संयोगेनाभावे साध्ये गुणत्वादौ तादात्म्येन घटविशिष्टस्य संयोगेनाभावे साध्ये घटानधिकर॰ राम
णत्वादौ चाव्याप्तिरिति चेन्न। साध्याभाववृत्तिसाध्यीयप्रतियोगितावच्छेदकत्वं भेदत्वं निरूपितत्वेन विशेषणीयमिति सर्वं सामंजस्यं॥ २

नन्वेवं घटभिन्नं कपालत्वादित्यादौ अव्याप्तिरिति चेन्न। साध्याभाववद्वृत्तित्वघटकसाध्याभावपदेन साध्यनिष्ठात्यंताभावत्वनिरूपकप्रतियो
गिताश्रयस्य विवक्षितत्वात्॥ यद्वा साध्यव्यापकस्य साध्यसमव्यापकस्य यस्य कस्यचित्पदार्थस्यात्यंताभावत्वनिरूपकप्रतियोगिताश्र
यो यः साध्यतावच्छेदकावच्छिन्नाभावस्तस्य विवक्षणात् घटभिन्नं कपालत्वादित्यादौ तादृशसाध्याभावश्च न घटः पटभेदेन सह विशेष
णताविशेषसंबंधेन समव्यापको यो घटत्वात्यंताभावस्तत्प्रतियोगिताया घटेभावात्। घटभेदस्य चात्यंताभावत्वनिरूपितप्रतियोगि न घट
इति घटस्य साध्याभावपदेन संग्रहः इत्थं च समवायरूपतादृशसंबंधेन घटभेदाभावस्य घटस्याधिकरणे कपालत्वस्य वृत्तित्वेपि नाव्याप्तिः
।घटत्वस्यैव तादृशसाध्याभावपदार्थत्वात् समवायरूपतादृशसंबंधेन तदधिकरणे घटे कपालत्वस्यावृत्तेरिति ध्येयं। वस्तुतस्तु यद्वाक
ल्पे धर्मिणो भेदस्य धर्मात्यंताभाववत्वं न कल्प्यते एवं भेदाभावस्य प्रतियोगिस्वरूपं न कल्प्यते तदकल्पनेप्ययं घट एतत्वादित्यत्राना
व्याप्तिः घटभिन्नभेदस्य स्वरूपत्वेन घटभेदात्मकसाध्याभावस्य घटात्मसाध्यीयप्रतियोगितावच्छेदकतया तदवच्छेदकताघटकस्व
रूपसंबंधमादाय लक्षणसंगमनसंभवादिति तत्वं। घटभिन्नं कपालत्वादित्यत्रापि नाव्याप्तिः घटभेदाभावस्य घटात्मकत्वादिति ध्येयं साध्या
भाववद्वृत्तित्वमित्यस्य साध्यतावच्छेदकसंबंधावच्छिन्नसाध्याभाववद्वृत्ति साध्यसामान्यीयप्रतियोगितावच्छेदकसंबंधेन साध्या
भावाधिकरणत्वं यद्वा साध्यतावच्छेदकसंबंधावच्छिन्नसाध्याभाववद्वृत्ति साध्यसामान्यीयप्रतियोगित्वतदवच्छेदकत्वान्यतराव
च्छेदकसंबंधेन साध्याभावाधिकरणत्वं विवक्षितं मथुरानाथेन। अत्रोभयकल्पे घटभिन्नं कपालत्वादित्यादावव्याप्तिः साध्याभाववद्वृ
त्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसमवायेन घटरूपस्य साध्याभावस्याधिकरणे कपाले हेतोर्वृत्तित्वात्॥ प्रमेयसाध्याभाव
स्य घटत्वस्य साध्यसामान्यीयप्रतियोगितावच्छेदकत्वसत्वात् तदवच्छेदकसमवायेन घटरूपस्य साध्याभावस्याधिकरणे कपाले

न·टी·क हेतोर्वृत्तितया वा व्याप्तिः। अथास्मद्गुरुचरणाः स्वावच्छिन्नत्वस्वावच्छिन्ननिरुक्तप्रतियोगितावच्छेदकत्वान्यतराश्रयनिरूपितत्वोभ
३ यसंबंधेन स्वविशिष्टसाध्याभावाधिकरणत्वस्य विवक्षितत्वाद्दोषः घटभिन्नं कपालत्वादित्यत्र कपालनिष्ठसाध्याभावाधिकरणत्वस्य
समवायसंबंधावच्छिन्नत्वेपि समवायसंबंधावच्छिन्नान्यतत्र यद्घटत्वादिनिष्ठमवच्छेदकत्वं तदाश्रयघटत्वनिरूपितत्वाभावान्नो
भयसंबंधेन समवायविशिष्टत्वं एवं तदधिकरणत्वस्य तादात्म्यसंबंधावच्छिन्नान्यतरत्वयद्घटनिष्ठप्रतियोगित्वं तदाश्रयनिरूपितत्वेपि
तादात्म्यसंबंधावच्छिन्नत्वाभावान्नोभयसंबंधेन तादात्म्यविशिष्टत्वं किंतु घटनिष्ठाधिकरणत्वमेव तादृशवृत्तित्वस्य हेतौ सत्वान्नाव्याप्ति
रिति स्वनिष्ठात्यंताभावत्वनिरूपकतादृशतादृशप्रतियोगितावच्छेदकान्यतरावच्छेदकसंबंधेन स्वात्मकसाध्याभावाधिकरणं यत्तद्वृत्ति
त्वमर्थः॥ तेन घटभिन्नं कपालत्वादित्यादौ नाव्याप्तिरित्यपि कश्चित्। सत्तावान् जातेरित्यादौ हेतुतावच्छेदकसंबंधावच्छिन्नवृत्तित्वाप्रसि
द्ध्याऽव्याप्तिरतो हेतुतावच्छेदकसंबंधावच्छिन्नाधेयत्वीयस्वरूपसंबंधेनाधेयत्वसामान्याभावो विवक्षितो मथुरानाथेन। अत्रेयमनुपपत्तिः
तादृशाविवक्षणे वह्निमान् धूमादित्यादौ शैवालादिनिष्ठतादृशसंबंधावच्छिन्नवृत्तित्वस्य कालिकसंबंधेन धूमे सत्वादव्याप्तिः संभव
नीति तत्परित्यागो नुचित इति मेवं हेतुतावच्छेदकसंबंधावच्छिन्नहेत्वधिकरणनिरूपिताधेयत्वीयसंबंधेन साध्याभावाधिकरणनिरूपितवृ
त्तित्वसामान्याभावस्य विवक्षितत्वादिति साध्यवद्भिन्नसाध्याभाववद्वृत्तित्वलक्षणे साध्याभाववत्वं न विशेषणताविशेषसंबंधेन घटत्वा
भाववान् पटत्वादित्यादावव्याप्तेः। किंतु साध्याभाववद्वृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसंबंधेनाभाववत्वं विवक्षणीयं वह्निमान् धू
मादित्यादौ विशेषणताविशेषसंबंधेन प्रतियोगिताको वन्ह्यभावाभावो वन्हिस्वरूप एव तन्निरूपितवन्ह्यभावनिष्ठप्रतियोगितावच्छेदकसं राम·
बंधश्च विशेषणताविशेष एव नाव्याप्तिः सामान्यपदोपादानात्समवायेन प्रमेयसाध्यकसत्ताहेतुकस्थले समवायसंबंधावच्छिन्नप्रतियो ३

गित्ताकप्रमेयाभावस्ययःकालिकसंबंधावच्छिन्नप्रतियोगिताकाभावस्यप्रमेयत्वेनसाध्यांतर्गततयातन्निरूपितसाध्याभाववृत्तिसाध्यी
यप्रतियोगितावच्छेदकसंबंधावच्छिन्नसाध्याभाववतिहेतोर्वृत्तित्वेपिनक्षतिः ननुसाध्यतावच्छेदकसंबंधावच्छिन्नप्रतियोगिताकप्रमे
यस्याभावोलाघवेनसत्तास्वरूपंकल्प्यते तन्निरूपितप्रतियोगितानसाध्यसामान्यनिरूपितेतिसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगित्व
प्रसिद्धिरितिचेन्न साध्यतावच्छेदकसंबंधेनवर्त्तमानयत्किंचित्साध्यनिरूपितस्वनिष्ठप्रतियोगितावच्छेदकसंबंधेनसाध्याभाववत्वंविव
क्षितंतेनसमवायसंबंधावच्छिन्नप्रतियोगिताकप्रमेयाभावाभावस्यसत्तास्वरूपत्वेपिनक्षतिः नचसमवायसंबंधावच्छिन्नप्रमेयसामा-
न्याभावस्यविनिगमनाविरहेणप्रमेयसामान्यस्वरूपत्वंकल्प्यतेतिवाच्यं।सत्तास्वरूपकल्पनावश्यकत्वेइतरस्वरूपकल्पनानावश्यकत्वा
त्।नचैवंकालिकसंबंधेनप्रमेयसाध्यकेकालिकत्वादिहेतावव्याप्तिः।कालिकसंबंधावच्छिन्नप्रमेयाभावस्ययःकालिकसंबंधावच्छिन्ना
भावस्तस्यस्वाभावात्मकस्यप्रमेयत्वेनसाध्यस्यप्रतियोगितावच्छेदककालिकसंबंधेनकालिकसंबंधावच्छिन्नप्रतियोगिताकप्रमेयाभा
वाधिकरणेहेतोर्वृत्तेरितिवाच्यं तादृशप्रतियोगितावच्छेदकयत्संबंधेनसाध्यवद्भिन्नवृत्तित्वमभावस्यतत्संबंधेनसाध्याभाववत्वंनिवे
शनीयमित्येकोनिष्कर्षोगदाधरेण।तत्रेदंसमाधानंयत्रविशेषणतयाघटादिवृत्तीनांविशेषणताविशेषेणसाध्यत्वेघटत्वाभावश्चहेतुस्तत्राव्या
प्तिर्विशेषणताविशेषसंबंधावच्छिन्नघटावृत्त्यभावस्ययःकालिकसंबंधावच्छिन्नाभावस्तस्याविशेषणतयाघटादिवृत्तितयासाध्यांतर्गतत
यातत्प्रतियोगितावच्छेदकीभूतघटात्मकसाध्यवद्भिन्नवृत्तितावच्छेदकीभूतकालिकसंबंधेनविशेषणताविशेषसंबंधावच्छिन्नप्रति
योगिताकघटावृत्त्यभावात्मकसाध्याभाववतिपटादौघटत्वाभावस्यवृत्तेरितिनिष्कर्षः॥५॥साध्याभाववदवृत्तित्वलक्षणेसाध्याभावव
द्वृत्तित्वाभावोपुत्रेतिबहुव्रीहिसमासादेवतादृशाधिकरणलाभाद्वृत्तिपदोत्तरंमत्वर्थीयप्रत्ययोनभवतुमर्हतीतिदोषोद्घटनंप्राचीनमते

नेकर्मधारयान्मत्वर्थीयोऽएवबहुव्रीहिरित्यादिनामथुरानाथेनकृतं अत्रेयमाशंका ननु तदुत्तरंवस्तुकतरस्तु इत्यादिकल्पेपिसाध्यस्य।भावः
साध्याभावःसयत्रास्तिअसौसाध्याभाववानित्यत्रसाध्याभावोयत्रेतिबहुव्रीहिणाताद्दशार्थलाभसंभवात्कथंसाध्याभावपदोत्तरंमत्वर्थी
यत्ननञ्चाभावोयत्रास्तिअसावभाववान् तदुत्तरंसाध्याभाववान्इतिषष्ठीतत्पुरुषाश्रयणान्नदोषइतिवाच्यं नसापेक्षेकृतद्धितसमासा
इत्यनेनैवविरोधादितिचेदुच्यते यत्रमत्वर्थीयप्रत्ययेनयद्यदर्थः प्रत्याय्यतेतत्रयदिबहुव्रीहिणातत्तदर्थः प्रत्याय्यतेतदेवताद्दशव्युत्प
त्तिरादरणीयाइतिनसर्वत्र अत्रतुताद्दशप्रत्ययस्ययथाधिकरणार्थतातथाप्रशंसार्थकताचप्रशंसाचात्राभावनिष्ठसाध्यतावच्छेदका
वच्छिन्नप्रतियोगिताकत्वंतथाचबहुव्रीहिणाधिकरणत्वेलाभेपिताद्दशार्थलाभसंभवः।नचप्राचीनमतेपिअवृत्तपदोत्तरंमत्वर्थीयप्रत्य
यस्यवृत्तित्वावच्छिन्नप्रतियोगिताकत्वरूपाभावनिष्ठप्रशंसाबोधकत्वसंभवान्नदोषइतिवाच्यं तत्रनञ्पदस्यैवान्वयितावच्छेदक॰
धर्मावच्छिन्नप्रतियोगिताकाभा वत्वविशिष्टबोधकत्वात् नञ्पदस्यताद्दशव्युत्पत्तिस्वीकारेपुनर्घटवत्यपिघटोनास्तीतिप्रत्ययाप॰
तिस्तत्रघटनिष्ठप्रतियोगिताकाभावसत्वात् नचसाध्याभाववानित्यत्राभावपदादेवताद्दशार्थलाभःसंभवतीतिवाच्यं।अभावपदस्य
ताद्दशार्थबोधकत्वात्।एतदेव दीधितौसाकल्यघटितलक्षणेसाध्याभावपदेनसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावोवि
वक्षितः।अन्यथातत्रसाध्याभावपदेनैवताद्दशार्थलाभसंभवाद्विवक्षया असिद्धत्वापत्तिरितिध्येयं साध्यवह्निन्नेतिसाध्याभावेसाध्य
तावच्छेदकसंबंधावच्छिन्नप्रतियोगिताकत्वनिवेशेह्रदादिवृत्तिसमवायावच्छिन्नवन्ह्यभाववत्पर्वतादौवृत्तेरसंभवस्यकालिकसं
बंधेनसमवायावच्छिन्नद्रव्यताभावस्यसाध्यत्वेकालत्वादौहेतौसाध्यवह्निन्नपरमाणुगगनादिवृत्तिदैशिकविशेषणताविशेषाव
च्छिन्नसाध्याभावात्मकद्रव्यत्वादौहेत्वधिकरणवृत्तित्वेनाव्याप्तेर्वाप्रसंगादितिग दाधरीननुसाध्याभावाधिकरणतायांसाध्यताव

च्छेदकसंबंधेनसाध्यवत्ताबुद्धिविषयविधयाप्रतिबंधकतावच्छेदकसंबंधावच्छिन्नत्वस्यावश्यंनिवेशनीयतयातादृशसंबंधश्चविशे
षणताविशेषएवकालिकसंबंधेनद्रव्यत्वाभाववत्ताबुद्धिंप्रतिदैशिकविशेषणताविशेषसंबंधेनकालिकसंबंधावच्छिन्नप्रतियोगिताकद्रव्य
त्वाभावप्रकारकज्ञानस्यबाधनिश्चयविधयाप्रतिबंधकत्वात्।तथाच द्रव्यत्वस्वरूपाभावाधिकरणाप्रसिद्धेर्वतादृशसाध्याभावमादाया
व्याप्तिरसंभवाद्व्यावृत्तेरसंगतिरितिचेन्नतादृशाभावस्यातिरिक्तत्वमभ्युपेत्यव्यावृत्तिर्दत्तातन्नभद्रं॥ ॥ननुवन्हिमान्धूमादित्यादौसाध्याभा
वाधिकरणधूमाधिकरणतानिरूपितवृत्तित्वस्यहेतौसत्वात्।अव्याप्तिरितिचेन्नस्वनिरूपितत्वस्वनिष्ठाधिकरणतानिरूपितत्वोभयसंबंधेन
साध्याभावाधिकरणविशिष्टस्यवृत्तितायांनिवेशान्नदोषइतिध्येयं॥२॥समाप्तेयं॥साध्याभाववदवृत्तित्वलक्षणे ननुवन्हिमान्धूमादित्यादा
वव्याप्तिःसाध्याभावाधिकरणीभूतधूमाधिकरणतानिरूपितवृत्तित्वंधूमेसत्वात्।वृत्तितायामधिकरणनिरूपितत्वस्यैवाधिकरणतानि
रूपितत्वस्यापिस्वीकारात्।साध्याभावाधिकरणतानिरूपितवृत्तित्वाभावविवक्षणेधूमवान्वन्हेरित्यादावतिव्याप्तेः।नचसाध्याभावा
धिकरणनिष्ठाधिकरणतानिरूपितवृत्तित्वस्यहेतौसत्वात्।नचहेत्वधिकरणताभिन्नत्वंसाध्याभावाधिकरणविवक्षणीयमित्यदोषः इ
तिवाच्यम्।धूमाधिकरणताभिन्नधूमादित्यादावव्याप्तेः हेत्वधिकरणताभिन्नसाध्याभावाधिकरणाप्रसिद्धिरितिचेन्न।स्वनिरूपितत्व
स्वनिष्ठाधिकरणतानिरूपितत्वोभयसंबंधेनस्वविशिष्टयद्वृत्तित्वंतदवृत्तित्वस्यविवक्षितत्वात्दोषासंभवात् स्वप्रकृतसाध्याभा
वाधिकरणंयद्यपिअवच्छेदकताभिन्नंअवच्छेदकत्वान्यत्वविशिष्टप्रमेयत्वादित्यादावव्याप्तिः साध्याभावाधिकरणंयदवच्छेदक
त्वंतन्निरूपितत्वस्यहेतुनिष्ठाधेयतायांसत्वात्।आधेयतायांआधेयतावच्छेदकतानिरूपितत्वात्। एवंतादृशावच्छेदकत्वनिष्ठय
दधिकरणत्वनिरूपितत्वस्यचसत्तावच्छेदकत्वान्यत्वविशिष्टहेतौअवच्छेदकतानिष्ठाधिकरणतावृत्तित्वादितिनिरुक्तोभयसंबं



धेनसाध्याभावाधिकरणीभूतावच्छेदकताविशिष्टवृत्तित्वस्यहेतौसत्वादित्युच्यते।नदास्वनिरूपितत्वपदेनस्वनिष्ठावच्छेदकतात्वावच्छिन्ननिरूपकता
निरूपितत्वस्यविवक्षणीयतयावारणसंभवादितिध्येयं।अथसाध्याभावनिरूपिताभावोविवक्ष्यतांकिमाधेयतानिवेशेचेतिचेन्न।वन्हिमान्धूमादित्यत्राऽ
व्याप्तेःसाध्याभावधूमाभावस्तन्निरूपितप्रतियोगितायाहेतौसत्वात्।नचनिरुक्तोभयसंबंधेनसाध्याभावाधिकरणविशिष्टाभावविवक्षन्नैषदोषइतिवाच्यं
।वन्हिमान्धूमाधिकरणत्वादित्यादावव्याप्तेःसाध्याभावाधिकरणह्रदतन्निष्ठाधिकरणत्वएतदन्यतरवृत्त्यभावस्यएतदन्यतरस्वरूपतयातन्निरूपितस्य
प्रतियोगित्वस्यहेतौसत्वादितिध्येयं।नव्यास्तुधूमाभाववान्धूमाधिकरणत्ववद्भिन्नत्वादित्यादावव्याप्तिः।धूमाधिकरणतावद्भेदाभावस्यप्रतियोगिताव-
च्छेदकोभयस्वरूपतयास्वनिरूपितत्वस्वनिष्ठाधिकरणतानिरूपितत्वोभयसंबंधेनस्वविशिष्टवत्वस्यहेतौसत्वादित्याहुः।ननुसाध्यतावच्छेदकसं
बंधावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकवृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसंबंधेनसाध्याभावाधिकरणत्वंनिवेश्यतां
किमभावनिवेशेचेतिचेन्न।कालिकसंबंधावच्छिन्नप्रतियोगिताकविषयित्वसामान्याभावस्यविषयितयासंबंधेनसाध्यत्वेतज्ज्ञानत्वेहेतावव्या
प्तिः तथाहि तत्रविषयित्वसंबंधप्रतियोगित्वस्यविषयित्वसंबंधावच्छिन्नाधेयत्वस्यानतिरिक्तत्वमतेसंसर्गविधयाविषयितासंबंधप्रतियोगिता
पिसाध्यतावच्छेदकसंबंधावच्छिन्नसाध्यतावच्छेदकावच्छिन्नेतितादृशप्रतियोगिताकेविषयित्वेसाध्यसामान्यीयकालिकसंबंधावच्छिन्नप्रति
योगितास्तीतितदवच्छेदककालिकसंबंधेनसाध्याभाववतितज्ज्ञानेहेतोर्वृत्तेरतस्तन्निवेशः।।नचतथापितत्राव्याप्तिरेवाभावाभावविधयातत्राप्यभाव
त्वस्यसत्वादितिवाच्यं।तादृशप्रतियोगितानिरूपितानुयोगितावतोनिवेशात्।नचतथापिकालिकसंबंधावच्छिन्नप्रमेयाभावस्यकालिकसाध्यतायां
कालत्वेहेतावव्याप्तिः।कालिकसंबंधावच्छिन्नप्रतियोगिताकप्रकृतसाध्याभावस्यानिरिक्तत्वेपियत्किंचित्प्रमेयरूपतयातन्निष्ठापिसाध्यसामान्यीयकालिकसंबं
धावच्छिन्नप्रतियोगितेतितदवच्छेदककालिकसंबंधेनसाध्याभाववतिहेतोर्वृत्तेरतस्तद्वारणायसाध्याभावनिष्ठत्वपदेनसाध्याभावत्वव्याप्यत्वंभवतावश्यंवक्तव्यंतथाचोक्तं

स्थले कालिकसंबंधावच्छिन्नसाध्यीयप्रतियोगिता साध्यनिष्ठापि न साध्याभावत्वव्याप्येति न दोषः। एवंच कालिकसंबंधावच्छिन्नविष
यित्वाभावस्य विषयितासंबंधेन साध्यतामपि तादृशप्रतियोगिताकत्वव्याप्यत्वनिवेशेनैव न दोषः किमभावनिवेशेनेति वाच्यं कालि
कसंबंधावच्छिन्नप्रतियोगिताकप्रमेयाभावस्य स्वरूपसंबंधेन साध्यत्वे आत्मत्वहेतावव्याप्तेः। तथाहि कालिकसंबंधावच्छिन्नप्रति
योगिताकोपः प्रकृतसाध्याभावस्तदभावस्यासाध्यस्वरूपतया तन्निष्ठा या साध्यसामान्यीय— स्वरूपसंबंधावच्छिन्नप्रतियोगिता सा
पि साध्यतावच्छेदकसंबंधावच्छिन्नसाध्यतानवच्छेदकावच्छिन्नप्रतियोगिताकयावत्प्रमेयरूपसाध्याभावत्वव्याप्येति तदवच्छे
दकस्वरूपसंबंधेन साध्याभाववत्यात्मनि हेतोर्वृत्तेरिति न च साध्याभावत्वसमनियतत्वं निवेश्यतामिति न दोष इति वाच्यं। कालि
कसंबंधावच्छिन्नप्रमेयाभावस्य कालिकेन योऽभावस्तस्य स्वरूपसंबंधेन साध्यत्वे हेतावव्याप्तिः। कालिकसंबंधावच्छिन्नप्रमेयत्वा
वच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्ना या स्वरूपसंबंधावच्छिन्नप्रतियोगिता सापि साध्याभावसमनियता प्रमेयात्मकसाध्य
सामान्यनिरूपिता चेति। तदवच्छेदकस्वरूपसंबंधमादाय साध्याभाववति हेतोर्वृत्तेरिति वाच्यं। साध्याभावनिष्ठत्वपदेन साध्याभाव
त्वावच्छिन्नत्वस्य विवक्षितत्वान्न कोपि दोषः। न च तादृशप्रतियोगिताकत्वावच्छिन्नत्वनिवेशेनैव सकलदोषनिरासे किमभावनिवे
शेनेति वाच्यं। कालिकसंबंधावच्छिन्नप्रतियोगिताकप्रमेयाभावस्य स्वसमानकालीनकालिकसंबंधावच्छिन्नप्रतियोगिताकप्रमे
याभाववत्तासंबंधेन साध्यत्वे कालत्वहेतावव्याप्तेः। तत्प्रतियोगिता तत्संबंधावच्छिन्नाधेयत्वस्यैक्यमते संसर्गविधया साध्यता
वच्छेदकसंबंधावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वं यावत्प्रमेयेऽस्ति। तथा च समनियताभावयोरैक्यमते नि
रुक्तसंसर्गविधया साध्यतावच्छेदकसंबंधावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्ववत्प्रमेयं नास्तीति प्रतीति

म० टी० सिद्ध्याभावस्यसाध्यनिरूपतयासंसर्गविधयासाध्यतावच्छेदकसंबंधावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगितायाअपि
का० ६ साध्यसामान्यीयतयाधर्त्तुंशक्यतयातादृशप्रतियोगितावच्छेदकसंबंधेनसाध्याभाववतिकालेहेतो र्वृत्तेः साध्याभावत्वावच्छि
न्नत्वनिवेशेनिरुक्तप्रतियोगिताकत्ववत्प्रमेयत्वावच्छिन्नप्रतियोगितायातादृशाभावत्वेनधर्तुमशक्यतयानकोपिदोषइतिवि
भावनीयंसुधीभिः॥ ॥ इतिमाथुरीपंचलक्षणीटिप्पणंकालीशंकरीसमाप्ता॥ ॥ वाराणसीप्रसादस्यनियोगेनप्रयत्नतः॥ काशी
संस्कृतमुद्रायामंकितोयंशिलाक्षरैः॥१॥ श्रीकाशीजीमेज्ञानवापीकेपूर्वफाटकपरश्रीविश्वनाथजीकेपासश्री३पुतमहाराजशिवलाल
दुबेजीकेमकानमेछपीजिनकोलेनेकीदरकारहोयउन्होनेइसछापेखानेकेकार्यसम्पादकबाबूवाराणसीप्रसादयाकचौरीगलीमेभाईप्र
तापसिंहजीकेदुकानपरमिलेगी॥ मितिज्येष्ठकृष्ण१३बुधवासरेसंवत्१९३१॥ ७ ॥ श्रीगजाननप्रसन्नोस्तु॥ ॥ ७ ॥ ॥






राम.